मयूखो मनोहाऽस्वलो विघकऽस्तनूदूर्षिरिन्द्रियहः तानिमजहामि यो रोचनस्तमिह गृह्णामि—इति मन्त्रेण अथमोदककुम्भाद्दक्षिणचुलुकेन अपो गृहीत्वा आत्मानमभिषिञ्चति वक्ष्यमाणमन्त्रेण—( तेनेति प्रजापतिर्ऋषिर्यजुश्छन्दः आपो देवताः अभिषेचने विनियोगः )।

(१) ॐ तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसाय-इति ॥ १ ॥

अथ द्वितीयोदककुम्भात् पूर्व्ववत् येऽप्स्वन्तरिति जलादानम्। अभिषेचने तु मन्त्रविशेषः—( येनेति प्रजापतिर्ऋषिरनुष्टुप्छन्द आपो देवताः अभिषेचने विनियोगः )।

(२) येन श्रियमकृणुतं येनावमृशतांᳬ सुराम्। येनाक्ष्यावभ्यषिञ्चतां यद्वां तदश्विना यशः-इति ॥ २ ॥

अथ तृतीयोदककुम्भात् येऽप्स्वन्तरिति पूर्व्ववदपो गृहीत्वा ( आपोहिष्ठेत्यादितिसृणां सिन्धुद्वीपऋषिर्गायत्री छन्द आपो देवताः अभिषेचने विनियोगः )।

---

इप्रत्ययः उप्रत्ययो वा। इन्द्रियाणि हन्तीतीन्द्रियहा। एतानमङ्गलानष्टौ निरस्य मङ्गलं रोचनं गृह्णामीति तात्पर्यार्थः।

गोहादयोऽग्नयो ह्यष्टावमेध्यास्त्वशुभावहाः।
शुभकृद्रोचनस्त्वेको मेध्यो दीप्तिकरः परः ॥

इति वृद्धमनुस्मृतेः ॥

( १ ) तेन रोचनाधिष्ठितेन मङ्गलजलेनाहं मामात्मानमभिषिञ्चामि। किमर्थमत आह-श्रियै सम्पदर्थं, यशसे कीर्त्यै, ब्रह्मणे वेदार्थज्ञानार्थं, ब्रह्मवर्चसाय तद्वीर्यवत्त्वाय च ॥

( २ ) हे अश्विनौ येन जलेन जलप्रभावेण भवन्तौ सुराणां श्रियं सम्पदम् अकृणुताम् ।अकुरुताम्। ( विकरणव्यत्यय आर्षः )। श्रियास्तोयत उत्पन्नत्वात्। येन च सुराम् अमृतम् अवमृशतां युवां प्रापतुः, येन च अक्ष्यौ उपमन्यो रक्षिणी अभ्यषिञ्चताम् अभिषिक्तवन्तौ, यच्च जलं वां युवयोः तत् प्रसिद्धम् यशः यशोरूपं, तेन मामभिषिञ्चामीत्यनुषङ्गः ॥

ॐआपो हि ष्ठा मयोभुवस्ता न ऽऊर्ज्जे दधातन । महे रणाय चक्षसे–इत्यभिषिञ्चेत् ॥ ३ ॥ अथ चतुर्थकुम्भात् येऽप्स्वन्तरिति पूर्ववज्जलमादाय—

ॐयो वः शिवतमो रसस्तस्य भाजयतेह नः । उशतीरिव मातरः–इति अभिषिञ्चेत् ॥ ४ ॥ अथ पञ्चमकुम्भात् येऽप्स्वन्तरिति पूर्ववज्जलमादाय—

ॐतस्मा ऽअरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जनयथा च नः–इति शिरोऽभिषिञ्चेत् ॥ ५ ॥

ततः षष्ठात् ६ सप्तमात् ७ अष्टमाच्च ८ उदककुम्भात् क्रमेण येऽप्स्वन्तरिति मन्त्रेणापो गृहीत्वा तूष्णीं शिरोऽभिषेचनं कुर्यात् ।

ततोऽभिषेकावशिष्टेन जलेन समाचारात् सहस्रधारां शिरसि धृत्वा स्नायात् ।

अथ पूर्वधृतां मेखलां बटुः वक्ष्यमाणमन्त्रं पठन् स्वयमेव शिरोमार्गेण निस्सारयेत्—( उदुत्तममिति शुनःशेपऋषिस्त्रिष्टुप्छन्दः वरुणो देवता मेखलोन्मोके विनियोगः ) ।

ॐउदुत्तमं व्वरुण पाशमस्मदवाधमं व्वि मध्यमꣳ श्रथाय । अथा व्वयमादित्य व्व्रते तवानागसो ऽअदितये स्याम–इति शिरोमार्गेण मेखलामुन्मुच्य, दण्डं निधायेति सूत्रात् साहचर्याच्च उदगग्रं दण्डमजिनं च तूष्णीं निधाय उपकल्पितमन्यद्वासस्तूष्णीं परिधाय द्विराचम्य आदित्यमुपतिष्ठते वक्ष्यमाणमन्त्रैः–( उद्यन्भ्राजभृष्णुरिति प्रजापतिर्ऋषिः शक्वरी छन्दः आदित्यो देवता आदित्योपस्थाने विनियोगः ) ।

(१) ॐउद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्प्रातर्यावभि-

---

(१) हे सूर्य यथा इन्द्रः प्रातर्यावभिः प्रातःसवने गमनशीलैर्मरुद्भिर्देवविशेषैः सेवितस्तिष्ठति, तथा भवान् प्रातः प्रातःकाले उद्य-

वभिरस्थाद्दशसनिरसि दशसनिं मा कुर्व्याविदन्मा गमय। उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवा याव-भिरस्थाच्छतसनिरसि शतसनिं मा कुर्व्याविदन्मा गमय। उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्सायं याव-भिरस्थात्सहस्रसनिरसि सहस्रसनिं मा कुर्व्याविद-न्मा गमय—इति मन्त्रैः ऊर्ध्वबाहुः सूर्योपस्थानं कुर्यात्।

ततो दधि तद्भावे तिलान् दक्षिणहस्तमध्यगतसोमतीर्थेन प्राश्य (१)जटालोमनखानि संहृत्य वपननिमित्तकं शीतलोदकेन

---

न् उदयं गच्छन् यावाभिः गमनशीलैर्ऋष्यादिलक्षणैः (या प्रापणे-ऽस्मात् क्वनिप्) सेवितः अस्थात् तिष्ठति। व्यत्यय आर्षः। किम्भूतो भवान्, भ्राजभृष्णुः भ्राजभरणशीलः। भ्राज् दीप्तौ अस्मादच्। भ्राजं बिभर्त्तीति भ्राजभृष्णुः। डुभृञ् धारणेऽस्मात्ष्णुच्। किञ्च यतस्त्वं प्रातःसवने दश गाः सनोति ददातीति दशसनिरसि। षणु दाने, किप्रत्ययः। अतो मामपि दशसनिं दशगोदक्षिणादातारं कुरु। अलिङ्गे गौः सर्वत्रेति कात्यायनेन परिभाषितत्वात्संख्येयानुक्तौ गावः प्रत्येतव्याः। किञ्च हे आविदन् आ समन्तात् वेत्तीति वा विन्दतीति वेति विग्रहः। हे सर्वज्ञ मा मां गमयं प्रापय। सर्वज्ञत्वमिति शेषः। किञ्च दिवायावभिर्माध्यन्दिनसवनानुगामिभिर्मरुद्भिः सह माध्य-न्दिने सवने इन्द्रो यथाऽस्थात् तिष्ठति तथा भवानपि मध्याह्ने उद्यन् ऊर्ध्वं यन् अस्थात्तिष्ठति। यतस्त्वं तत्र शतसनिरसि अतो मामपि शतसनिं कुर्वित्यादि पूर्ववत्। एवं सायंयावभिस्तृतीयसव-नानुयायिभिर्मरुद्भिः सहेत्याद्यपि व्याख्येयम्॥

(१) इदं द्वादशवार्षिकादिव्रतान्ते समावर्त्तनपक्षे। उपनयन-दिने एव समावर्तनानुष्ठाने तु केशमुण्डनस्य पूर्वं जातत्वेन मुखलो-म्नामनुद्गमेन क्वचित् उद्गमेऽपि केशान्तसंस्कारस्यापि समावर्त्तनसं-स्कारात्पूर्वमनुष्ठेयत्वेन तद्दिने एव पूर्वं मुखलोम्नामपि वपनस्य जात-त्वेन प्रयोजनाभावात्। केशश्मश्रुवपनं निवर्तते। एवमेव चौलसं-स्कारे मुण्डनस्य जातत्वेन उपनयनेऽपि मुण्डनं निवर्तते। नखकर्त-नमात्रं समावर्तने कार्यमित्येकः पक्षः रामाण्डारादिसम्मतः। प्रयो-जनाभावेऽपि स्पर्शसंस्कारमात्रं क्षुरेण कार्यमेवेत्यपरः उपेन्द्रादिसं-

स्नात्वा आचम्य ततः ब्राह्मणः द्वादशाङ्गुलदीर्घेण, क्षत्रियो दशाङ्गुलेन, वैश्योऽष्टाङ्गुलेन कनिष्ठिकाऽग्रस्थूलेन उदुम्बरकाष्ठेन दन्तधावनं वक्ष्यमाणमन्त्रेण कुर्यात्-( अन्नाद्यायेत्याथर्वणऋषिरनुष्टुप्छन्दः सोमो देवता दन्तधावने विनियोगः )।

(१)ॐ अन्नाद्याय व्यूहध्व॑ᳪं सोमो राजाऽयमागमत्। स मे मुखं प्रमार्क्ष्यते यशसा च भगेन च-इति। तत आचम्य सुगन्धिद्रव्ययुक्तेन कटुतैलयुक्तयवादिचूर्णेन शरीरोद्वर्तनं कृत्वा तप्तोदकेन सशिरस्कं स्नात्वाऽऽचम्य चन्दनाद्यनुलेपनं गृहीत्वा अनुलेपनेन हस्तावुपलिप्य नासिकयोर्मुखस्य चोपगृह्णीते वक्ष्यमाणमन्त्रेण ( प्राणापानाविति प्रजापतिर्ऋषिर्यजुश्छन्दः लिङ्गोक्ता देवता चन्दनोपसङ्ग्रहणे विनियोगः )।

(२)ॐप्राणापानौ मे तर्पय-इति नासिकायाम्। ॐचक्षुर्मे तर्पय—इति चक्षुषोः। ॐश्रोत्रं मे तर्पय-इति श्रोत्रयोः। ततः अपसव्यं विधाय पाणी प्रक्षाल्य तदवनेजनं दक्षिणाभिमुखः पितृतीर्थेन दक्षिणस्यां दिशि निषिञ्चेत् वक्ष्यमाणमन्त्रेण-( पितर इति प्रजापत्याश्विसरस्वत्य ऋषयो यजुश्छन्दः पितरो देवताः निषेचने विनियोगः )।

---

मतः वृद्धसंमतश्च। इदं च पद्यद्वयं मिताक्षराटीकायां ( ३७ पृ० ) बालंभट्टेन प्रदर्शितम् इत्यधिकं तत एवावगन्तव्यम् ॥

( १ ) हे दन्ताः यूयम् अन्नाद्याय अन्नभक्षणाय व्यूहध्वम् आत्मशुद्ध्यर्थम् एकपङ्क्तिनिविष्टा भवत। यतोऽयं राजा सोमश्चन्द्रः काष्ठरूपेणागमत् अतः स एव मे मुखं प्रमार्क्ष्यते शोधयिष्यति यशसा कीर्त्या, भगेन भाग्येन च। चद्वयं मिथः समुच्चये। दन्तधावनस्य नित्यकाम्यत्वादुभयफलसम्बन्धः ॥

( २ ) भो अनुलेपनाधिदेवते मे प्राणापानौ वायू गन्धेन तर्पय प्रीणय। तृप प्रीणने। एवं चक्षुर्मे इत्यादौ चक्षुस्तर्पणं रूपेण, श्रोत्रतर्पणं सच्छब्दश्रवणेनेति द्रष्टव्यम् ॥

(१)ॐपितरः शुन्धध्वम्–इति पाण्योरवनेजनजलं भूमौ निषिञ्चेत् । पित्र्यत्वात्सव्येनोदकस्पर्शः । ततोऽनुकेपानन्तरं केशवादिनामभिर्द्वादश तिलकान्धारयेत् । यथा ॐकेशवाय नमः ललाटे १ ॐनारायणाय नमः उदरे २ ॐमाधवाय नमः हृदये ३ ॐगोविन्दाय नमः कण्ठकूपके ४ ॐविष्णवे नमः दक्षिणकुक्षौ ५ ॐमधुसूदनाय नमः दक्षिणबाहौ ६ ॐत्रिविक्रमाय नमः कर्णमूलयोः ७ ॐवामनाय नमः वामकुक्षौ ८ ॐश्रीधराय नमः वामबाहौ ९ ॐपद्मनाभाय नमः पृष्ठदेशे १० ॐदामोदराय नमः ककुदि ११ ॐवासुदेवाय नमः मूर्द्ध्नि १२ इति । ललाटे वंशपत्राकृतिकं मध्यशून्यं धारयेदिति च । एवं तिलकान् धृत्वा वक्ष्यमाणमन्त्रं जपेत् । (सुचक्षा इति प्रजापतिर्ऋषिः यजुश्छन्दः सविता देवता जपे विनियोगः ) ।

(२)ॐसुचक्षा ऽअहमक्षीभ्यां भूयासꣳ सुवर्चा मुखेन । सुश्रुत्कर्णाभ्यां भूयासम्–इति ॥

अथोपकल्पितमहतं वासः परिधत्ते वक्ष्यमाणमन्त्रेण ( परिधास्यै इत्याथर्वणऋषिः पङ्क्तिश्छन्दो वासो देवता अधोवस्त्रपरिधाने विनियोगः ) ।

---

( १ ) अस्य मन्त्रस्य 'स्वाद्वीं त्वा' इति १९ अध्याये 'पितृभ्यः स्वधायिभ्यः' इति ३६ कण्डिकायाः सप्तमखण्डरूपत्वात् तस्याध्यायस्य च सौत्रामणीष्ट्यङ्गत्वात् सौत्रामणीमन्त्राणां च "प्रजापतेरार्षमश्विनोः सरस्वत्याश्च" इति सर्वानुक्रमसूत्रेण प्रजापत्यश्विसरस्वत्यृषिकत्वबोधनात्, तथैव महीधरभाष्ये उक्तत्वाच्च इन्द्राग्न्योः ऋषिप्रदर्शकवाक्ये प्रामादिक इति बोध्यम् । हे पितरः शुन्धध्वं पाणिप्रक्षालनजलेन शुद्धा यूयं भवतेति मन्त्रार्थः ॥

( २ ) हे सवितः अहमक्षीभ्याम् (ईदन्तत्वं छान्दसं) नेत्रगोलकाभ्यां कृत्वा सुचक्षाः साधु चष्टे इति सुचक्षाः सुदर्शनो, भूयासमित्युत्तरेणान्वयः, मुखेन सुवर्चाः सुतेजाः भूयासं, कर्णाभ्यां सुश्रुत्सुश्रवणो भूयासम् ॥

(१)ॐ परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि । शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये—इति । ततो द्विराचम्य द्वितीययज्ञोपवीतधारणं कुर्यात् ।

ब्रह्मचारिण एकं तु स्नातस्य द्वे बहूनि वेति वचनात् । अत्र केचित् नूतनं यज्ञोपवीतद्वयं धारयित्वा पूर्वधृतं यज्ञोपवीतं त्याज्यमिति वदन्ति । अन्ये तु भङ्गादिरूपत्यागनिमित्ताभावात्पूर्वधृतं न त्याज्यम् । तेन एकमेवापरं यज्ञोपवीतं धार्यमित्याहुः ।

अथोत्तरीयम् ( यशसेत्याथर्वणऋषिः पङ्क्तिश्छन्दो लिङ्गोक्ता देवता उत्तरीयपरिधाने विनियोगः ।

(२)ॐ यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्प-

---

( १ ) हे वस्त्र त्वाम् अहं यत्परिधास्यै ( ऐकारश्छान्दसः ) परिधास्ये, तत् यशो धास्यै यशो धारयामि । यद्वा परिधास्यै अनेकवस्त्रपरिधानाय, यशोधास्यै कीर्त्याधानाय, डुधाञ् धारणे औणादिकः सिप्रत्ययः । धासिमिव प्रभरेस्यांदौ तथा दर्शनात् । दीर्घायुत्वाय निर्दुष्टजीवनाय च त्वां संव्ययिष्ये इत्यन्वयः । कीदृशोऽहं, वासोदेवतानुग्रहेण जरदष्टिः-जरन्तो अष्टिस्तनुर्यस्य सः आयुष्परिपाकवान्, पुरूची पुरुभिर्बहुभिः पुत्रधनादिभिः उचः संयोगोऽस्येति पुरूची । उच समवाये । किम्भूतं वासः, रायस्पोषं धनस्य पुष्टिकरम् । किञ्च त्वत्सम्बन्धेनाहं शतं शरदो जीवामि ।

( २ ) हे वस्त्र द्यावापृथिवो द्यावाभूमी यशसा युक्तौ मा माम् अविन्दत् विन्दतां प्राप्नुताम् । विद्लृ लाभे । तथा इन्द्राबृहस्पती अपि यशसा युक्तौ मां विन्दतां, भगः सूर्यश्च यशसा युक्तोऽविन्दत् विन्दतु । एवमेतैः सम्पादितं यशो मा मां प्रतिपद्यतां, मां सदाऽऽप्नोत्वित्यर्थः । अविददिति पाठे नुमभाव आर्षः ॥

उत्तरीयमाविकादिकमपि ग्राह्यं, न तु परिधानीयम् ।

आविकं त्रसरं चैव परिधाने परित्यजेत् ।
शस्तं प्रावरणे प्रोक्तं स्पर्शदोषो न हि द्वयोः ॥

ती। यशोऽसि यशसे मा इन्द्रेणा यशो मा प्रतिपद्यताम्—
इति। एक एव वासश्चेत्तदा पूर्वोत्तरवर्गेणाच्छादयेत्।

ततः द्विराचम्य मालारूपाः सुमनसो गृह्णाति वक्ष्यमाणमन्त्रेण—(याऽआहरदिति भरद्वाजऋषिरनुष्टुप्छन्दः सुमनसो देवताः पुष्पमालाग्रहणे विनियोगः)।

(१) ॐ या ऽआहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय। ता ऽअहं प्रतिगृह्णामि यशसा च भगेन च—इति। अथावध्नीते वक्ष्यमाणमन्त्रेण—(यद्यशोऽप्सरसामिति भरद्वाजऋषिरनुष्टुप्छन्दः सुमनसो देवताः पुष्पमालाबन्धने विनियोगः)

(२) ॐ यद्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु। तेन संग्रथिताः सुमनस ऽआबध्नामि यशो मयि—इति। अथोष्णीषेण शिरो वेष्टयते वक्ष्यमाणमन्त्रेण—(युवासुवा-

---

इति लघ्वाश्वलायनस्मृतिवचनात् (१।१६) "नग्नः कौशेयकेवलः" इति नन्दपण्डितकृतपराशरस्मृतिटीकायां भृगुवचनाच्च।

परिधेयं सदा वासः कार्पासं सदशं सितम्।
क्षौमं वा कुतपं वाऽपि न कौशेयं कदाचन॥

इति तत्रैव जातूकर्ण्यवचनाच्च॥

(१) जमदग्निर्ऋषिः याः सुमनसः पुष्पाणि श्रद्धायै धर्मादरार्थं, मेधायै धारणाशक्तये, कामाय अभिलाषपूर्तये, इन्द्रियाय तत्पाटवाय च आहरत् आददे ताः सुमनसः यशसा च भगेन च निमित्तेनाहं प्रतिगृह्णामि। चद्वयं मिथः समुच्चये॥

(२) हे सुमनसः इन्द्रोऽप्सरसामुर्वश्यादीनां कुसुमावबन्धनेन यद्यशोऽतिसौन्दर्यं सर्वजनप्रियत्वं वा चकार तेन यशसा निमित्तभूतेन ग्रथितास्तन्तुना स्यूताः युष्मानाबध्नामि। तद्यशो मयि विषये सदा, अस्त्विति शेषः। कीदृशं, विपुलं—विशालं, पृथु सन्ततं दीर्घम्॥

सा इति विश्वामित्रऋषिस्त्रिष्टुप्छन्दः ( उष्णीषं ) शिरो देवता शिरोवेष्टने विनियोगः ) ।

( १ ) ॐ युवा सुवासाः परिवीत ऽआगात्स ऽउ श्रेयान् भवति जायमानः । तन्धीरासः कवय ऽउन्नयन्ति स्वाध्यो मनसा देवयन्तः—इति । ततोऽन्यान्यपि कञ्चुकादीनि वासांसि सदाचारात् परिधाय कर्णवेष्टकौ परिधत्ते वक्ष्यमाणमन्त्रेण—( अलङ्करणमिति प्रजापतिर्ऋषिः यजुश्छन्दः अलङ्करणं दैवतम् अलङ्करणे विनियोगः ) ।

( २ ) ॐ अलङ्करणमसि भूयोऽलङ्करणं भूयात्—इति कुण्डलं दक्षिणकर्णे परिधाय अनेनैव मन्त्रेण वामकर्णे दधाति । अथाक्षिणी अञ्जनेनाङ्क्ते वक्ष्यमाणमन्त्रेण—( वृत्रस्येति प्रजापतिर्ऋषिर्यजुश्छन्दः अञ्जनं देवता अक्ष्यञ्जने विनियोगः)।

( ३ ) ॐ वृत्रस्यासि कनीनकश्चक्षुर्दा ऽअसि चक्षुर्मे देहि—इत्यनेन दक्षिणं संस्कृत्य अनेनैव वामं संस्करोतीति हरिहरादयः । वामं पूर्वं दक्षिणं पश्चात् बह्वृचश्रुत्यनुरोधादिति गदाधरः । तत आत्मानमादर्शे वक्ष्यमाणमन्त्रेण प्रेक्ष-

---

( १ ) यौति गुणानेकीकरोतीति युवा यु मिश्रणे, सुवासाः शोभनवस्त्रः, परिवीतः उष्णीषेण शिरसि वेष्टितः अयं स्नातक आगतः । स उ—स एव एवंगुणविशिष्टः सन् श्रेयान् भवति । तमु एनं स्नातकम् धीरासः धीराः कवयः क्रान्तदर्शनः स्वाध्यः शोभनचित्तवृत्तयः विद्वांसः मनसा चित्तेन देवयन्तः देवान् कामयमानाः उन्नयन्ति उत्कर्षं गमयन्ति ॥

( २ ) हेकुण्डलदेवत त्वमलङ्करणम् अलंक्रियते येनेत्यलङ्करणमसि अतस्त्वां धारयतो मम भूयो बहु वारंवारं वाऽलङ्करणं भूयात् ॥

( ३ ) य. सं. अ. ४ कं. ३ खं. २—हे अञ्जन त्वं वृत्रस्यासुरस्य कनीनकोऽसि नेत्रमध्यगतमण्डलरूपोऽसि । चक्षुर्दा असि कनीनिकारूपत्वात्त्वं दृष्टिप्रदोऽसि, अतो मे मह्यं चक्षुर्देहि सम्यग्दृष्टिपाटवं प्रयच्छ ॥

ते—( रोचिष्णुरिति प्रजापतिर्ऋषिर्यजुश्छन्दः आदर्शो देवता आदर्शे मुखमेक्षणे विनियोगः )।

( १ ) ॐ रोचिष्णुरसि । ततश्छत्रं प्रतिगृह्णाति वक्ष्यमाणमन्त्रेण ( बृहस्पतेश्छदिरिति गौतमऋषिः आर्ची बृहती छन्दः छत्रं देवता छत्रग्रहणे विनियोगः )।

( २ ) ॐ बृहस्पतेश्छदिरसि पाप्मनो मामन्तर्द्धेहि तेजसो यशसो माऽन्तर्द्धेहि—इति ॥ तत उपानहौ युगपत्प्रतिमुञ्चते वक्ष्यमाणमन्त्रेण—( प्रतिष्ठे स्थ इति विश्वामित्रऋषिर्विराट्छन्दो लिङ्गोक्ता देवता उपानत्प्रतिमोके विनियोगः )।

( ३ ) ॐ प्रतिष्ठे स्थो विश्वतो मा पातम्-इति। ततो वैणवं दण्डमादत्ते वक्ष्यमाणमन्त्रेण-( विश्वाभ्य इति याज्ञवल्क्यऋषिर्यजुश्छन्दो दण्डो देवता दण्डग्रहणे विनियोगः)।

(४) ॐ विश्वाभ्यो मा नाष्ट्राभ्यस्परिपाहि सर्वतः—इति।

अत्र मातृपूजनादि पूर्णपात्रदानान्तम् आचार्य्यस्य कृत्यम्, अष्टकलशाभिषेकादि दण्डग्रहणान्तं ब्रह्मचारिणः बटोः कृ-

---

( १ ) हे आदर्श त्वं रोचिष्णुः प्रकाशनशीलः असि ॥

( २ ) हे छत्र त्वं बृहस्पतेर्देवगुरोः छदिर्घर्मादिनिवर्त्तकोऽसि अतः कारणात्पाप्मनो निषिद्धाचरणात् मामन्तर्धेहि व्यवहितं कुरु। तेजसो यशसश्च सकाशात्तु मा मन्तर्धेहि। मा-शब्दोऽत्र निषेधार्थः। तेजोयशोभ्यां युक्तं मां कुर्वित्यर्थः॥

( ३ ) हे उपानहौ युवां प्रतिष्ठे प्रतितिष्ठत्याभ्यामिति प्रतिष्ठे स्थितिहेतू स्थः भवथ अतो विश्वतः सर्वस्मादहिकण्टकादेः मा मां पातं रक्षतम् ॥

( ४ ) हे वैणवदण्ड त्वं विश्वाभ्यः सर्वाभ्यो नाष्ट्राभ्यो राक्षसादिप्रजाभ्यः सर्वतः सर्वावस्थासु मा मां परिपाहि रक्ष। उपध्मानीयाभावश्छान्दसः ॥

त्यम् । वासश्छत्रोपानद्दण्डव्यतिरिक्तानि दन्तधावनादीनि मन्त्र-वन्ति सदा कुर्यात्, वासःप्रभृतीनि तु नूतनान्येव मन्त्रवन्ति धारयेत् । तत आचार्यं सम्पूज्य वरं दद्यात् । गौर्ब्राह्मणस्य-वर उच्यते । तत्र सङ्कल्पः—अद्येहामुकोऽहं मम स्नातकत्वसिद्धये कृतस्य समावर्त्तनकर्मणः साङ्गतासिद्ध्यर्थं साद्गुण्यार्थं च इमां गां गोनिष्क्रयीभूतं सुवर्णं रजतं वा वररूपेण आचार्याय तुभ्यं सम्प्रददे ॐ तत्सत् इति दद्यात् ।

तत आचार्यमुखात् स्नातको नियमान् शृणुयात् । तत्राद्यं सूत्रम्—( पारस्करगृह्य० कां० २ कं० ७ )

स्नातस्य यमान्वक्ष्यामः–इति ॥ १ ॥

स्पष्टार्थम् ॥

कामादितरः ॥ २ ॥

कामात् इच्छया इतरः द्विजातेरन्यः शूद्रोऽपि यमेषु अ-धिक्रियते ॥

नृत्यगीतवादित्राणि न कुर्यान्न च गच्छेत् ॥ ३ ॥

नृत्यं ताल्लाद्यनुकार्यङ्गविक्षेपः । गीतं तालोपनिबद्धष-ड्जादिस्वरविशेषरागध्वनिः । वादित्रं तालाद्यनुकारि ततादि-भेदेन चतुर्विधम् । एतानि स्वयं न कुर्यात् । नृत्यादि अन्यैः प्रयुक्तं द्रष्टुं श्रोतुं च न च गच्छेत् ॥

क्षेमे रात्रौ ग्रामान्तरं न गच्छेन्न च धावेत् ॥ ४ ॥

क्षेमे राजादिभयराहित्ये सति रात्रौ ग्रामान्तरं न गच्छेत्, न च धावेत् ।

उदपानावेक्षण-वृक्षारोहण-फलप्रपतन-सन्धिस-र्पण-विवृतस्नान-विषमलङ्घन-शुक्तवदन-सन्ध्यादि-त्यप्रेक्षण-भिक्षणानि न कुर्यात् ॥ ५ ॥

अस्यार्थः—उदपानं कूपादि तस्य उपरिष्टात्स्थित्वा कौ-तुकादिना अधोमुखो भूत्वा अवेक्षणं दर्शनं न कुर्यात् । वृक्षा-

रोहणं वृक्षोपरि गमनम् । फलप्रपतनं वृथाऽपक्वफलमोटनम् । सन्धिसर्पणं—सन्धिः कुद्वारं जीर्णद्वारं वा तेन सर्पणं गमनं न कुर्यात् । यद्वा सन्धौ सन्ध्यामनुपास्य सर्पणमध्वगमनं न कुर्यात् । अथवा अनुरक्तयोः-पुत्रजनकयोः, मित्रयोः, दम्पत्योः, भ्रात्रोर्वा ऐक्यं सन्धिः तत्र भेदाय मध्ये गमनं न कार्य्यम् । विवृतस्नानं नग्नस्नानं । विषमलङ्घनं गर्त्तादेर्लङ्घनं । शुक्तं लज्जाकरामङ्गलकरदुःखकरेति त्रिविधं निष्ठुरवाक्यं, तस्य वदनं भाषणम् । सन्ध्यादित्यप्रेक्षणं तिसृषु सन्ध्यासु आदित्यावलोकनम् । तदुक्तम्—

नेक्षेतादित्यमुद्यन्तं नास्तं यान्तं कथञ्चन ।
नोपरक्तं न वारिस्थं न मध्ये नभसो गतम् ॥ इति ।

भिक्षणं सिद्धान्नयाचनम् । एतानि क्षेमे सति न कुर्यात् ॥

**वर्षत्यप्रावृतो व्रजेत् ॥ ६ ॥**

देवे इन्द्रे वर्षति सति अप्रावृतः अनाच्छादितः सन् ( अयमिति प्रजापतिर्ऋषिर्जगती छन्दः वज्रो देवता वृष्टिजपे विनियोगः ) ।

ॐ अयम्मे वज्रः पाप्मानमपहनत्—इमं मन्त्रं पठन् व्रजेत् गच्छेत् ॥

**अप्स्वात्मानं नावेक्षेत ॥ ७ ॥**

अप्सु जलेषु आत्मानं प्रतिबिम्बितं मुखं न पश्येत् । एतच्च तैलादिष्वप्युपलक्षणम् । घृते तु छायादर्शनं कर्त्तव्यमेव ।

**अजातलोम्नीं विपुंसीं षण्ढं च नोपहसेत् ॥८॥**

अजातलोम्नीं भ्रूनेत्रादिस्थाने रोमरहितां, विपुंसीं पुरुषचिह्नश्मश्र्वादियुक्तां स्त्रियं नोपहसेत्, न च गच्छेत् । षण्ढं नपुंसकं च नोपहसेत् । दोषाधिक्यायैतत् ॥

**गर्भिणीं विजन्येति ब्रूयात्, सकुलमिति नकुलं, भगालमिति कपालं, मणिधनुरितीन्द्रधनुः ॥ ९ ॥**

गर्भिणीं स्त्रियं विजन्या इत्येवं ब्रूयात् वदेत् । नकुलं पशु-विशेषं सकुलमिति ब्रूयात् । कपालं कर्परं मनुष्यादिशिरः भगालमिति ब्रूयात् । इन्द्रधनुः मणिधनुरिति ब्रूयात् ॥

**गां धयन्तीं परस्मै नाचक्षीत ॥ १० ॥**

स्ववत्सं पाययन्तीं गां "गौस्ते पाययति वत्सम्" इति परस्मै तत्स्वामिने नाचक्षीत न वदेत् ॥

**उर्वरायामनन्तर्हितायां भूमावुत्सर्पंस्तिष्ठन्न मूत्र-पुरीषे कुर्य्यात् ॥ ११ ॥**

उर्वरायां सस्यवत्यां, तृणैरनन्तर्हितायां च भूमौ, उत्सर्पन् उत्प्लवमानः सन्, तिष्ठन् ऊर्ध्वः सन् मूत्रपुरीषे न कुर्य्यात् । एतच्च फालकृष्टभूमि-मार्ग-जीर्णदेवायतन-प्राणिगर्त्तादीनामप्यु-पलक्षणार्थम् ॥

**स्वयं प्रशीर्णेन काष्ठेन गुदं प्रमृजीत ॥ १२ ॥**

यत्नं विना पतितेन अयज्ञियेन काष्ठशकलेन गुदं प्रमृजीत प्रोञ्छेत् । एतच्च लोष्टादीनामप्युपलक्षणम् ॥

**विकृतं वासो नाच्छादयीत ॥ १३ ॥**

विकृतं स्मृतिशिष्टाचाराभ्यां विरुद्धं नील्यादिरक्तं वासो न परिदधीतेत्यर्थः । पालाशादिपुष्परक्तं वासस्तु परिदध्यादेव ।

**दृढव्रतो वधत्रः स्यात् ॥ १४ ॥**

दृढं स्थिरं व्रतं प्रारब्धं कर्म्म यस्य सः, असमाप्तकर्मा न स्यादित्यर्थः । वधात् घातात् आत्मानं त्रायते इति वधत्रः । स च शृङ्गिनखिदंष्ट्रिभ्यः सम्भवति । तेभ्यो रक्षां कुर्वीतेत्यर्थः ॥

**सर्व्वत आत्मानं गोपायेत् सर्वेषां मित्रमिव॥१५॥**

आत्मानं सर्वतो रक्षेत् । सर्वेषां स्वेषां परेषां वा मित्रमिव भूयात् । मैत्रो ब्राह्मण उच्यते इति स्मरणात् ॥

इति साधारणशिक्षानियमाः ॥

अथ समावर्त्तनानन्तरं त्रिरात्रनियमाः ।

( कं० ८ ) तिस्रो रात्रीर्व्रतं चरेत् ॥ १ ॥

समावर्त्तनानन्तरं त्रिरात्रं वक्ष्यमाणं व्रतं कुर्यात् ।

अमांसाश्यमृन्मयपायी ॥ २ ॥

भवेत् । मांस न भक्षयेत् । मृन्मयेन पात्रेण जलं न पिबेत् । एतच्चालाबुतुम्ब्यादीनामुपलक्षणम् ॥

स्त्रीशूद्रशवकृष्णशकुनिशुनां चादर्शनमसम्भाषा च तैः ॥ ३ ॥

स्त्री नारी, शूद्रश्चतुर्थो वर्णः, शवो मृतकः, कृष्णशकुनिः काकः, श्वा कुक्कुरः । एतेषां दर्शनं भाषणं च त्रिरात्रं वर्जयेत् ॥

शवशूद्रसूतकान्नानि च नाद्यात् ॥ ४ ॥

शवान्नं मृताशौचान्नं, शूद्रान्नं भोज्यान्नस्यापि नापितादेरवरवर्णस्यान्नं, सूतकान्नं जाताशौचान्नं च नाद्यात् ॥

मूत्रपुरीषे ष्ठीवनं चातपे न कुर्यात् सूर्याच्चात्मानं नान्तर्दधीत ॥ ५ ॥

आतपे घर्मे मूत्रादि न कुर्यात् । छत्त्रवस्त्रादिना सूर्यात् आत्मानं शरीरं न गोपायेत् ॥

तप्तेनोदकार्थान्कुर्वीत ॥ ६ ॥

शौचादीन् तप्तजलेन कुर्यादित्यर्थः ॥

अवज्योत्य रात्रौ भोजनम् ॥ ७ ॥

दीपादि प्रज्वलय्य रात्रौ भोजनं कुर्यान्नान्धकारे इत्यर्थः ॥

सत्यवदनमेव वा ॥ ८ ॥

अथवा सत्यवदनमेव नियमं कुर्यात् । अनृतं मिथ्याभाषणं न कुर्यात् । एवं शिक्षयित्वा एतान्नियमान्करिष्यामीति बटुमवधार्य—

आचार्यः एनं बटुं स्वपादयोः पातयित्वा पूर्णाहुतिं जुहुयात्–समाचारात्,

विवाहे व्रतबन्धे च शालायां चौलकर्मणि।
गर्भाधानादिसंस्कारे पूर्णाहुतिं न कारयेत्॥

इति पूर्वोक्तनिषेधस्य समावर्तनेऽभावाच्च। तत्र सङ्कल्पः- अद्येह अमुकोऽहम् अस्य पुत्रस्य समावर्तनकर्मणः न्यूनातिरिक्तदोषपरिहारार्थं सर्वाभ्युदयप्राप्तये च मृडनामाग्नौ पूर्णाहुतिहोमं करिष्ये इति सङ्कल्प्य मृडाग्निं गन्धाद्युपचारैः अभ्यर्च्य स्रुचि स्रुवेण द्वादशकृत्वः स्थाल्या आज्यं गृहीत्वा तत्र घृताक्तं रक्तवस्त्रखण्डावृतं सुपूजितं सुभूषितं नारिकेलादिफलं निधाय अधोमुखेन स्रुवेण पिधाय उत्थाय तिष्ठन् समिद्धेऽग्नौ वसमभितधारया मूर्धानन्दिव इति मन्त्रेण प्रथमभागोक्तेन (पृ० १७७)जुहुयात्। स्रुगभावे घृतपूर्णेन स्रुगुक्तविशेषणविशिष्टेन स्रुवेण उपविश्य जुहुयात्।

(अत्रेतिकर्तव्यतामाह संग्रहकारः-

एवं यथोचितं शक्त्या हुत्वा पूर्णाहुतिं चरेत्।
घृतेनापूर्य स्रुग्गतमूर्ध्वंवक्त्रस्रुचि स्रुवम्॥
निधायाधोमुखं, न्यसेत्स्रुचाग्रे कुसुमाक्षतम्।
पश्चाद्वामपुरोदक्षकराभ्यां शङ्खधारया॥
गृहीत्वा स्रुक्स्रुवौ मन्त्री स्रुचाग्रन्यस्तलोचनः।
ऋजुकायः प्रसन्नात्मा समपादः समुत्थितः॥
स्थिरधीर्जुहुयादग्नौ वसमभितधारया।
पूर्णाहुतिरियं प्रोक्ता सर्वकर्मप्रपूरणी॥ इति।

विधानपारिजाते आश्वलायनः-

आज्यं द्वादशकृत्वस्तु गृहीत्वा पूरयेत्स्रुचम्।
तया चाज्याहुतिः कार्या सा पूर्णाहुतिरिष्यते॥
स्रुवपूर्णाहुतिर्वा स्यादित्येके याज्ञिका विदुः॥ इति)।

ततः स्नातकस्य पित्रादिः चौलादिसमावर्तनान्तकर्मणां परिपूर्त्यर्थं गोदानं कुर्यात्। आचार्यं सम्पूज्य देयद्रव्यं संप्रोक्ष्य सम्पूज्य संकल्प्य कर्मोपदेशकायाचार्याय दद्यात्। तत उत्तराङ्गत्वेन

राजपुत्रनामाग्नेः पूजनं विधाय उत्तराङ्गत्वेन नवग्रहादीनां पूजनं कुर्यात् । स्नातकेन सह ग्रहवेदीसमीपमागत्य आसने उपविश्याचम्य सङ्कल्पं कुर्यात्-ॐविष्णुः३ अद्येहेत्यादि संकीर्त्य अमुकोऽहम् अमुकस्य बटोः कृतानां चूडापनयनवेदारम्भसमावर्त्तनकर्मणाम् उत्तराङ्गत्वेन सगणाधिपमातॄणां ब्रह्मवरुणाधिदेवतादिसहितादित्यादिनवग्रहाणां च पूजनं करिष्ये इति । ततः ॐगणपतये नमः ॐमातृभ्यो नमः ॐआदित्याय नमः इत्यादिनाममन्त्रैः ध्यानादिनीराजनान्तं सम्पूज्य ब्रह्मामुरारिरिति सम्प्रार्थ्य प्रतिमादानसङ्कल्पं कुर्यात् — अद्येहेत्यादि सङ्कीर्त्य अमुकोऽहम् अमुकराशेः पुत्रस्य चूडापनयनवेदारम्भसमावर्त्तनकर्मणां ग्रहयागस्य साङ्गफलप्राप्तये साद्गुण्यार्थं च इमाः सुपूजिताः सौवर्णीः आदित्यादिनवग्रहप्रतिमाः वस्त्रच्छन्नाः आचार्यादिब्राह्मणेभ्यो विभज्य दास्ये ॐतत्सत् । कृतैतत्प्रतिमादानप्रतिष्ठासिद्ध्यर्थम् इदं द्रव्यं च ब्राह्मणेभ्यो विभज्य दास्ये इति सङ्कल्प्य प्रतिमाः दत्त्वा जापकादिभ्यो दक्षिणां दद्यात् । ततो भूयसीं सङ्कल्पयेत्—अद्येहेत्यादि सङ्कीर्त्य अमुकोऽहम् अमुकराशेः पुत्रस्य चूडापनयनवेदारम्भसमावर्त्तनकर्मणां न्यूनातिरिक्तपरिहारार्थं साद्गुण्यार्थं च इमां भूयसीं दक्षिणां नानागोत्रेभ्यो ब्राह्मणेभ्यो नटनर्त्तकगायकेभ्यो दीनानाथेभ्यश्च विभज्य दास्ये इति सङ्कल्प्य दद्यात् । ततः समावर्त्तनकर्मणः साङ्गफलप्राप्त्यर्थं साद्गुण्यार्थं च यथोपपन्नेन सिद्धान्नेन दश यथासंख्याकान् वा ब्राह्मणान्भोजयिष्ये इति सङ्कल्प्य राजपुत्रनामाग्निं विसृज्य मातॄणां नवग्रहादीनां च विसर्जनं कुर्यात्—

(१)ॐउपावर्त्तं धूर्षाहौ युज्यथामनश्रू ऽअवीरहणौ ब्रह्मचोदनौ । स्वस्ति यजमानस्य गृहान् गच्छतम् ॥

(१) य० सं० अ० ४ मं० ३३ । वसत्यनयोर्मनदिति उक्तो

यान्तु देवगणाः सर्वे पूजामादाय मामिकाम् ।
इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥
गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर ।
यत्र ब्रह्मादयो देवास्तत्र गच्छ सुरेश्वर ॥ इति ।

अथ कर्म्मसर्वाङ्गपूर्त्यै—

ॐ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥
ॐअच्युताय नमः ३ ।
प्रमादात्कुर्वतां कर्म्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥

ॐविष्णवे नमः ३ । ॐकायेन वाचेति ईश्वरार्पणं कुर्यात् ।

ततः घृते छायां स्नातकं दर्शयित्वा अभिषेकतिलकरक्षाबन्धनमन्त्रपाठादि कारयेत् । ततः बहिःशालातः शिबिकादियानेन स्वस्तिवाचन-शङ्खघण्टादिशब्दपुरःसरं पिष्टातकस्वस्तिकाङ्कितगोधूमशष्कुल्यलंकृतशुचिवस्त्राच्छन्नाध्वना गृहं प्रविश्य—

कुमारी धनदा नन्दा विपुला मङ्गलाऽचला ।
पद्मा चैव समाख्याताः सप्तैता द्वारमातरः ॥

इत्युक्त्वा मातॄः देवगृहद्वारि सम्पूज्य दध्यादिमङ्गलद्रव्यहस्ताभ्यो भगिनीभ्यो रजतादिद्रव्यं दत्त्वा तद्धस्तेन अक्षिणी अञ्जयित्वा जीवमातॄणां पूजनं कुर्यात् । तद्यथा—आसने उपविश्याचम्य प्राणानायम्य ॐसुमुखश्चेत्यादि पठित्वा अर्घं संस्थाप्य पूजासंक-

---

जगदधिष्ठानभूतौ हे प्रकृतिपुरुषौ एतम्—पुनर्यज्ञे वितते सति आगच्छतम्, युञ्जेथां—युक्तौ च भवतम् । युवयोर्योगं विना कर्मप्रचारासम्भवात् । कीदृशौ युवां धूर्षाहौ—कर्मधुरं वोढुं शक्तौ, अनश्रू—अश्रुरहितौ सोत्साहौ, अवीरहणौ—वीराणां कर्मणि सोत्साहानां हननं नाशमकुर्वाणौ, ब्रह्मचोदनौ—ब्रह्मणो ब्राह्मणस्य कर्मणि प्रेरकौ च । इदानीं गृहान् स्वस्वरूपं गच्छतम् । युष्मत्प्रसादात् यजमानस्य स्वस्ति कल्याणं भवतु ।

ल्पः—अद्येहेत्यादि संकीर्त्य अमुकोऽहम् अमुकराशेः पुत्रस्य चूडोपनयनवेदारम्भसमावर्त्तनकर्म्मणाम् उत्तराङ्गत्वेन गृहप्रवेशकर्म्मणि सर्वाभ्युदयप्राप्तये भित्त्यादिलिखितानां कल्याण्यादिसप्तजीवमातॄणां यथामिलितोपचारैः पूजनं करिष्ये इति । "ॐएतन्ते" इत्यादि पठित्वा ॐभूर्भुवः स्वः कल्याण्यादिसप्तजीवमातर इहागच्छन्तु इह तिष्ठन्तु सुप्रतिष्ठिता वरदा भवन्तु इति प्रतिष्ठाप्य, ध्यानम्—

कल्याणी मङ्गला भद्रा पुण्या पुण्यमुखी तथा ।
जया च विजया चैव सप्तैता जीवमातरः ॥

इति ध्यात्वा नाममन्त्रेण पाद्यादिनीराजनान्तं सम्पूज्य वसोर्धाराः पातयित्वा ब्रह्माणीकमलेन्दुसौम्यवदनेति पुष्पाञ्जलिं समर्प्य दक्षिणासंकल्पः—अद्येहामुकोऽहं चौलादिकर्मणाम् उत्तराङ्गत्वेन कृतस्य जीवमातॄणां पूजनकर्मणः साद्गुण्यार्थम् इमां दक्षिणां ब्राह्मणाय दास्ये ॐतत्सत् इति दद्यात् । तत आचारात् भगिन्यादिभिर्बटोः महानीराजनं तिलकादि च कार्य्यम् । ततोऽशीतिं यथाशक्ति वा ब्राह्मणान्भोजयित्वा इष्टबन्धुभिः सह भुञ्जीत । यथासुखं विहरेत् ॥

ततश्चतुर्थेऽहनि माता बटुना सुवासिनीभिश्च सह शङ्खघण्टादिशब्दपुरःसरं मातृपीठादि चौलकेशांश्च गृहीत्वा जलाशयं गत्वा जलाशयनिकटे संस्थाप्य जलाशयनिकटवर्तिनि कुड्ये मत्स्यादिमातॄर्लेखयित्वा नमोऽन्तैः मत्स्यै कूर्म्यै वाराह्यै कुक्कुट्यै दर्दुर्यै जलूक्यै सोमायै इति चतुर्थ्यन्तनाममन्त्रैः गन्धाद्युपचारैः पूजयित्वा जलं प्राश्य मुक्तबन्धनाः पूर्वनिर्मितपोटलिकाः जलाशयतटे निधाय ब्राह्मणादिद्वारा मातृफलकं क्षालयित्वा नर्तकादिभ्यो मोदकादि दत्त्वा जलकुम्भहस्तानग्रतः कृत्वा शङ्खादिशब्दपुरःसरं गृहं प्रविश्य ताम्रकटाहपाचितं मिष्टान्नं गृहवर्तिभिः स्वजनैः सह भुक्त्वा यथासुखं विहरेत् ॥

इति चूडोपनयनवेदारम्भसमावर्त्तनप्रयोगः ।

## (१३) अथ केशान्तः ( गोदानम् )।

अयं च "षोडशवर्षस्य केशान्तः" इति पारस्करगृह्यसूत्रात्सप्तदशे वर्षे, कालापकर्षं कृत्वा ततः पूर्वं वा श्मश्रूद्गमानन्तरं कार्यः। यद्यप्ययं द्वादशवार्षिकादिव्रतानुष्ठानानन्तरं समावर्तनपक्षे समावर्तनात्पूर्वमेव प्राप्तस्तथापि पञ्चवार्षिकादिव्रतानुष्ठानानन्तरं समावर्तनपक्षे तदुत्तरमेव प्राप्नोतीति समावर्तनपूर्वकालिकत्वस्यास्मिन्ननियमात् श्मश्रूद्गमनात् पूर्वं प्राधान्येन श्मश्रुसंस्काररूपस्यास्यानुचितत्वादुपनयनदिने समावर्तनानुष्ठाने कालापकर्षं कृत्वा समावर्तनात् पूर्वमस्यानुष्ठेयत्वान्न तैः सहास्य तन्त्रेण प्रयोग उपदिष्टः।

### अथ प्रयोगः—

तत्र चन्द्रतारानुकूले चौलोक्तशुभदिने संस्कार्यस्य पित्रादिः केशान्तं कुर्यात्। तद्यथा—विवाहपूर्वाङ्गप्रयोगोक्तरीत्या (पृ० ८९) संस्कार्यं संस्नाप्य पित्रादिः सुस्नातो दीपं प्रज्वल्याचम्य प्राणानायम्य स्वदक्षिणतः संस्कार्यमुपवेश्य शान्तिपाठं ( स्वस्तिवाचनं ) कृत्वा अर्घं संस्थाप्य देवेभ्यः पुष्पाञ्जलिं समर्प्य पूर्वोक्तविधिना गणेशं सम्पूज्य प्रधानसङ्कल्पं कुर्य्यात्। अमुकोऽहममुकशर्मणोऽस्य पुत्रस्य संस्कारातिशयाधानद्वारा श्रीपरमेश्वरप्रीत्यर्थं केशान्ताख्यसंस्कारं करिष्ये। तत्पूर्वाङ्गत्वेन मातृपूजाऽऽभ्युदयिकश्राद्धपुण्याहवाचनानि करिष्ये इति सङ्कल्प्य तानि क्रमेण कृत्वा सति सम्भवे प्रथमभागोक्तरीत्या (पृ० १८७) ग्रहयागं कृत्वा अन्यथा कलशे ब्रह्मवरुणसहितादित्यादिग्रहपूजनं कृत्वा रक्षासूत्रमभिमन्त्र्य कलशोपरि स्थापयेत्। समाचारात् चौलात्पूर्वरात्रौ क्रियमाणं केशाधिवासनं त्वत्र न कर्त्तव्यम्। श्मश्रूणां जुटिकाबन्धनयोग्यत्वाभावात्। ततः संस्कार्यस्य पिता स्थण्डिले पञ्चभूसंस्कारान् कृत्वा सूर्यनामाग्निं संस्थाप्य त्रीन्

ब्राह्मणान् मिष्टान्नेन तर्पयित्वा आचार्यब्रह्मणोर्वरणं कृत्वा दक्षिणतो ब्रह्मणे आसनं दत्त्वा तत्र तमग्नेः पूर्वमार्गेणोपवेशयेत् । नात्र संस्कार्यस्य मातुरुपस्थे उपवेशनं, बाल्याभावेनायुक्तत्वात् इति गृह्यवृत्तौ नारायणः । ततः कर्ता प्रणीताप्रणयनादि पूर्णपात्रदानान्तं चौलवत् ( पृ० २८० ) कुर्यात् । तत्र चूडापदस्थाने केशान्तेत्यूहः कार्यः, सूर्यनामकाग्निश्चात्र प्रतिष्ठापनीयः । ततो कृम्रदानं विधायोपकल्पितपात्रे शीतास्वप्सु उष्णा अप आसिञ्चति वक्ष्यमाणमन्त्रेण ( उष्णेनेति परमेष्ठी ऋषिः प्रतिष्ठा छन्दः लिङ्गोक्ता देवता उष्णोदकासेके विनियोगः ) ।

ॐउष्णेन वाय ऽउदकेनेध्यदिते केशश्मश्रु वप—इति । उष्णोदकमिश्रिते शीतोदके उपकल्पितं घृतपिण्डं तूष्णीं प्रास्यति । तत उदकमादाय दक्षिणगोदानसमीपश्मश्रु वक्ष्यमाणमन्त्रेणोनत्ति—

( सवित्रेति प्रजापतिर्ऋषिः गायत्री छन्दः आपो देवताः उन्दने विनियोगः ) ।

ॐसवित्रा प्रसूता दैव्या ऽआप ऽउन्दन्तु ते तनूम् । दीर्घायुत्वाय वर्चसे—इति । ततस्त्र्येण्या शलल्या तूष्णीं श्मश्रु विनीय त्रीणि कुशतरुणान्यन्तर्दधाति—

(ओषधे इति प्रजापतिर्ऋषिः यजुश्छन्द ओषधिर्देवता कुशतरुणान्तर्धाने विनियोगः )।

ॐओषधे त्रायस्व—इति मन्त्रेण । ततस्ताम्रपरिष्कृतमायसक्षुरमादत्ते—(शिवो नामेति प्रजापतिर्ऋषिः यजुश्छन्दः क्षुरो देवता क्षुरग्रहणे विनियोगः )-

ॐशिवो नामासि स्वधितिस्ते पिता नमस्ते ऽअस्तु मा मा हिंसीः—इत्यनेन मन्त्रेण । ततो दर्भतरुणान्तर्हितेषु क्षुरं सँल्लयं करोति—(निवर्तयामीति प्रजापतिर्ऋषिः यजुश्छन्दः क्षुरो देवता क्षुरनिधाने विनियोगः ) ।

ॐनिवर्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय- इति मन्त्रेण। ततश्छिनत्ति-( येनावपत् इति आलम्बायनऋषिः पङ्क्तिश्छन्दः सविता देवता श्मश्रुच्छेदने विनियोगः )।

ॐयेनावपत् सविता क्षुरेण सोमस्य राज्ञो व्वरुणस्य व्विद्वान्। तेन ब्रह्माणो व्वपतेदमस्यायुष्यं जरदष्टिर्यथाऽसत्—इत्यनेन मन्त्रेण सश्मश्रूणि कुशतरुणानि प्रच्छिद्य उत्तरतो ध्रियमाणे गोमयपिण्डे प्रास्य उदकस्पर्शं कृत्वा ततस्तस्मिन्नेव दक्षिणश्मश्रुणि एवमेवोन्दनादि वारद्वयं तूर्ष्णीं कर्म कर्तव्यम्। अत्र पश्चिमगोदानाभावात् मध्यत्वसाम्यात् श्मश्रुमध्ये अधरोष्ठादधःस्थे सर्वमुन्दनादि कर्म कुर्यात्। श्मश्रुच्छेदने मन्त्रविशेषः-(त्र्यायुषमिति नारायणऋषिरुष्णिक् छन्दः अग्निर्देवता श्मश्रुच्छेदने विनियोगः)

ॐत्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम्। यद्देवेषु त्र्यायुषं तन्नो ऽअस्तु त्र्यायुषम्--इति। ततः पूर्ववत् तूर्ष्णीं पुनर्वारद्वयं कर्म कुर्यात्। ततं उत्तरंगोदानसमीपश्मश्रुणि पूर्ववदुन्दनादि कर्तव्यम्। छेदने मन्त्रविशेषः-(येनेति वामदेवऋषिर्यजुश्छन्दः क्षुरो देवता श्मश्रुच्छेदने विनियोगः)।

ॐ येन भूरिश्चरा दिवं ज्योक्च पश्चाद्धि सूर्यम्। तेन ते व्वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तये-इति। अत्रापि वारद्वयं तूर्ष्णीं पूर्ववदुन्दनादि। ततः त्रिः क्षुरेण शिरः प्रदक्षिणं समुखं परिहरेत्। तत्र प्रथमवारं परिहरणे मन्त्रः-(यत्क्षुरेणेति वामदेवऋषिर्यजुश्छन्दः क्षुरो देवता परिहरणे विनियोगः)।

ॐयत्क्षुरेण मज्जयता सुपेशसा व्वप्त्रा वा व्वपति केशश्मश्रु च्छिन्धि, शिरोमुखं माऽस्यायुः प्रमोषीः- इति। ततस्तेनैवोदकेन सर्वत्र आर्द्रीकरणम्। नापिताय क्षुरदा-

नम्—(अक्षण्वन्निति वामदेवऋषिरनुष्टुप्छन्दः क्षुरो देवता ना-पिताय क्षुरदाने विनियोगः)।

ॐअक्षण्वन् परिवप—इत्यनेन मन्त्रेण। स नापित उदङ्मुखस्थितस्य प्राङ्मुखस्थितस्य वा मुण्डनं करोति। सकेशं गोमयपिण्डमनुगुप्तगोष्ठे निधाय पित्रादिः स्वाचार्याय कुमाराचार्याय वा गोरूपं वरं दद्यात्। ततो ब्राह्मणेभ्यो भूयसीं दक्षिणां दत्त्वा दश यथाशक्ति वा ब्राह्मणान् भोजयिष्ये इति संकल्प्य अग्निं देवांश्च विसृज्य कर्मसम्पूर्णतां वाचयित्वा यस्य स्मृत्येत्युक्त्वा विष्णुं नमस्कृत्य ब्राह्मणद्वारा अभिषेकतिलकमन्त्रपाठादि कारयेत्।

(केशानाम् अन्तः समीपस्थितः श्मश्रुभाग इति व्युत्पत्त्या केशान्तशब्देन श्मश्रूणामभिधानात् श्मश्रुसंस्कार एव केशान्त-शब्देन प्रतिपाद्यते। अत एवाश्वलायनेनापि "श्मश्रूणीहोन्दति"। इति श्मश्रूणां संस्कार एवात्रोपदिष्टः। संस्कारगणपतिना चा-यमेवादृतः। उष्णोदकासेकमन्त्रे केशपदोपादानं तु नापितकर्तृ-कवपनसाधारण्येन तस्योपयोगित्वाद्बोध्यम्। एवमन्यत्रापि। श्मश्रुशब्देन च मुखजानि लोमान्यभिधीयन्ते इति देवयाज्ञिकः। तस्मादत्र केशानां क्षुरेण समन्त्रकसंस्कारो न। तत्संस्कारस्य पूर्वं जातत्वाच्चेति दिक्)॥ इति केशान्तः॥

विवाहप्रयोगस्तु पूर्वमेव प्रदर्शितः। स्मार्ताधानश्रौताधानयोः प्रयोगौ अन्यतोऽवगन्तव्यौ इत्युपरम्यते॥

वेदाश्वनवभूवर्षे वैशाखे धवले दले।
त्रयोदश्यां शनौ पूर्तिं गतः संस्कारदीपकः॥

इति श्रीनित्यानन्दपर्वतीयविरचितः संस्कारदीपकः॥

गुरुः शरणम्॥



| १ मूलपुरुषः | मूलपुरुषः | मूलपुरुषः | मूलपुरुषः | मूलपुरुषः | मूलपुरुषः |
|---|---|---|---|---|---|
| कन्या वरः | कन्या पिता<br>वरः | कन्या पितामहः<br>पिता<br>वरः | कन्या प्रपितामहः<br>पितामहः<br>पिता<br>वरः | कन्या वृद्धप्रपिता.<br>प्रपितामहः<br>पितामहः<br>पिता<br>वरः | कन्या वृद्धतरप्रपिता.<br>वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>वरः |
| मू०<br>पिता वरः<br>कन्या | मू०<br>पिता पिता<br>कन्या वरः | मू०<br>पिता पितामहः<br>कन्या पिता<br>वरः | मू०<br>पिता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः | मू०<br>पिता वृद्धप्रपिता.<br>कन्या प्रपितामहः<br>पितामहः<br>पिता<br>वरः | मू०<br>पिता वृद्धतरप्रपि.<br>कन्या वृद्धप्रपिता.<br>प्रपितामहः<br>पितामहः<br>पिता<br>वरः |
| मू०<br>पितामहः वरः<br>पिता<br>कन्या | मू०<br>पितामहः पिता<br>पिता वरः<br>कन्या | मू०<br>पितामहः पितामहः<br>पिता पिता<br>कन्या वरः | मू०<br>पितामहः प्रपितामहः<br>पिता पितामहः<br>कन्या पिता<br>वरः | मू०<br>पितामहः वृद्धप्रपिता.<br>पिता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः | मू०<br>पितामहः वृद्धतरप्रपि.<br>पिता वृद्धप्रपिता.<br>कन्या प्रपितामहः<br>पितामहः<br>पिता<br>वरः |

| | | | | | |
|---|---|---|---|---|---|
| २ मू०<br>प्रपितामहः वरः<br>पितामहः<br>पिता<br>कन्या | मू०<br>प्रपितामहः पिता<br>पितामहः वरः<br>पिता<br>कन्या | मू०<br>प्रपितामहः पितामहः<br>पितामहः पिता<br>पिता वरः<br>कन्या | मू०<br>प्रपितामहः प्रपितामहः<br>पितामहः पितामहः.<br>पिता पिता<br>कन्या वरः | मू०<br>प्रपितामहः वृद्धप्रपि.<br>पितामहः प्रपिता.<br>पिता पितामहः<br>कन्या पिता<br>वरः | मू०<br>प्रपितामहः वृद्धतर.<br>पितामहः वृद्धप्रपिता.<br>पिता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः |
| मू०<br>वृद्धप्रपिता. वरः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू०<br>वृद्धप्रपिता. पिता<br>प्रपितामहः वरः<br>पितामहः<br>पिता<br>कन्या | मू०<br>वृद्धप्रपिता. पितामहः<br>प्रपितामहः पिता<br>पितामहः वरः<br>पिता<br>कन्या | मू०<br>वृद्धप्रपिता. प्रपिता.<br>प्रपितामहः पितामहः<br>पितामहः पिता<br>पिता वरः<br>कन्या | मू०<br>वृद्धप्रपिता. वृद्धप्रपि.<br>प्रपितामहः प्रपिता.<br>पितामहः पितामहः<br>पिता पिता<br>कन्या वरः | मू०<br>वृद्धप्रपिता. वृद्धतरप्र.<br>प्रपितामहः वृद्धप्रपि.<br>पितामहः प्रपितामहः<br>पिता पितामहः<br>कन्या पिता<br>वरः |
| मू०<br>वृद्धतरप्र. वरः<br>वृद्धप्रपिता.<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू०<br>वृद्धतरप्र. पिता<br>वृद्धप्रपिता. वरः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू०<br>वृद्धतरप्र. पितामहः<br>वृद्धप्रपिता. पिता<br>प्रपितामहः वरः<br>पितामहः<br>पिता<br>कन्या | मू०<br>वृद्धतरप्र. प्रपितामहः<br>वृद्धप्रपिता. पिताम.<br>प्रपितामहः पिता<br>पितामहः वरः<br>पिता<br>कन्या | मू०<br>वृद्धतरप्र. वृद्धप्रपिता.<br>वृद्धप्रपि. प्रपिताम.<br>प्रपितामहः पितामहः<br>पितामहः पिता<br>पिता वरः<br>कन्या | मू०<br>वृद्धतरप्र. वृद्धतरप्रपि.<br>वृद्धप्रपि. वृद्धप्रपिता.<br>प्रपितामहः प्रपिता.<br>पितामहः पितामहः<br>पिता पिता<br>कन्या वरः |

| | | | | | |
|---|---|---|---|---|---|
| २ मू०<br>माता वरः<br>कन्या | मू०<br>माता पिता<br>कन्या वरः | मू०<br>माता पितामहः<br>कन्या पिता<br>वरः | मू०<br>माता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः | मू०<br>माता वृ. प्रपिताम.<br>कन्या प्रपितामहः<br>पितामहः<br>पिता<br>वरः | मू०<br>माता वृद्धतरप्रपि.<br>कन्या वृ. प्रपिता.<br>प्रपितामहः<br>पितामहः<br>पिता<br>वरः |
| मू०<br>मातामहः वरः<br>माता<br>कन्या | मू०<br>मातामहः पिता<br>माता वरः<br>कन्या | मू०<br>मातामहः पितामहः<br>माता पिता<br>कन्या वरः | मू०<br>मातामः. प्रपिताम.<br>माता पितामहः<br>कन्या पिता<br>वरः | मू०<br>मातामः. वृ. प्रपिता.<br>माता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः | मू०<br>मातामहः वृद्धतरप्रपि.<br>माता वृद्धप्रपिता.<br>कन्या प्रपितामहः<br>पितामहः<br>पिता<br>वरः |
| मू०<br>पितामही वरः<br>पिता<br>कन्या | मू०<br>पितामही पिता<br>पिता वरः<br>कन्या | मू०<br>पितामही पितामहः<br>पिता पिता<br>कन्या वरः | मू०<br>पितामही प्रपितामहः<br>पिता पितामहः<br>कन्या पिता<br>वरः | मू०<br>पितामही वृ. प्रपिता.<br>पिता प्रपिताम.<br>कन्या पितामहः<br>पिता<br>वरः | मू०<br>पितामही वृद्धतरप्रपि.<br>पिता वृद्धप्रपिता.<br>कन्या प्रपितामहः<br>पितामहः<br>पिता<br>वरः |

| | | | | | |
|---|---|---|---|---|---|
| ४ मू०<br>मातामही वरः<br>माता<br>कन्या | मू०<br>मातामही पिता<br>माता वरः<br>कन्या | मू०<br>मातामही पितामहः<br>माता पिता<br>कन्या वरः | मू०<br>मातामही प्रपिताम.<br>माता पितामहः<br>कन्या पिता<br>वरः | मू०<br>मातामही वृ. प्रपिता.<br>माता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः | मू०<br>मातामही वृ.तरप्रपिता.<br>माता वृद्धप्रपिताम.<br>कन्या प्रपितामहः<br>पितामहः<br>पिता<br>वरः |
| मू०<br>प्रमातामहः वरः<br>मातामहः<br>माता<br>कन्या | मू०<br>प्रमातामहः पिता<br>मातामहः वरः<br>माता<br>कन्या | मू०<br>प्रमातामहः पितामहः<br>मातामहः पिता<br>माता वरः<br>कन्या | मू०<br>प्रमातामहः प्रपिताम.<br>मातामहः पितामहः<br>माता पिता<br>कन्या वरः | मू०<br>प्रमातामहः वृद्धप्रपि.<br>मातामहः प्रपिताम.<br>माता पितामहः<br>कन्या पिता<br>वरः | मू०<br>प्रमाताम. वृद्धतरप्रपि.<br>मातामहः वृद्धप्रपिता.<br>माता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः |
| मू०<br>पितामहीपिता वरः<br>पितामही<br>पिता<br>कन्या | मू०<br>पितामहीपि. पिता<br>पितामही वरः<br>पिता<br>कन्या | मू०<br>पितामहीपि. पितामहः<br>पितामही पिता<br>पिता वरः<br>कन्या | मू०<br>पितामहीपि. प्रपिता.<br>पितामही पितामहः<br>पिता पिता<br>कन्या वरः | मू०<br>पितामहीपि. वृद्धप्र.<br>पितामही प्रपितामहः<br>पिता पितामहः<br>कन्या पिता<br>वरः | मू०<br>पितामहीपि. वृद्धतरप्र.<br>पितामही वृद्धप्रपिता.<br>पिता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः |

| | | | | | |
|---|---|---|---|---|---|
| ६ मू०<br>मातामहीपिता वरः<br>मातामही<br>माता<br>कन्या | मू०<br>मातामहीपि. पिता<br>मातामही वरः<br>माता<br>कन्या | मू०<br>मातामहीपि. पिताम.<br>मातामही पिता<br>माता वरः<br>कन्या | मू०<br>मातामहीपि. प्रपिता.<br>मातामही पितामहः<br>माता पिता<br>कन्या वरः | मू०<br>मातामहीपि. वृद्धप्र.<br>मातामही प्रपितामहः<br>माता पितामहः<br>कन्या पिता<br>वरः | मू०<br>मातामहीपि.वृद्धतरप्र.<br>मातामही वृद्धप्रपिता.<br>माता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः |
| मू०<br>पितामहमाता वरः<br>पितामहः<br>पिता<br>कन्या | मू०<br>पिताम. मा. पिता<br>पितामहः वरः<br>पिता<br>कन्या | मू०<br>पिताम.मा. पितामहः<br>पितामहः पिता<br>पिता वरः<br>कन्या | मू०<br>पिताम.मा.प्रपितामहः<br>पितामहः पितामहः<br>पिता पिता<br>कन्या वरः | मू०<br>पिताम.मा. वृद्धप्रपि.<br>पितामहः प्रपिताम.<br>पिता पितामहः<br>कन्या पिता<br>वरः | मू०<br>पिताम.मा.वृद्धतरप्रपि.<br>पितामहः वृद्धप्रपिता.<br>पिता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः |
| मू०<br>पितामहीमाता वरः<br>पितामही<br>पिता<br>कन्या | मू०<br>पिताम. मा. पिता<br>पितामही वरः<br>पिता<br>कन्या | मू०<br>पिताम.मा. पितामहः<br>पितामही पिता<br>पिता वरः<br>कन्या | मू०<br>पिताम.मा.प्रपिताम.<br>पितामही पितामहः<br>पिता पिता<br>कन्या वरः | मू०<br>पिताम.मा. वृद्धप्रपि.<br>पितामही प्रपिताम.<br>पिता पितामहः<br>कन्या पिता<br>वरः | मू०<br>पिताम.मा.वृद्धतरप्रपि.<br>पितामही वृद्धप्रपिता.<br>पिता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः |

| | | | | | |
|---|---|---|---|---|---|
| ६ मू० <br> मातामहीमाता वरः <br> मातामही <br> माता <br> कन्या | मू० <br> मातामहीमा. पिता <br> मातामही वरः <br> माता <br> कन्या | मू० <br> मा. महीमा. पितामहः <br> मातामही पिता <br> माता वरः <br> कन्या | मू० <br> मा. महीमा. प्रपिता. <br> मातामही पितामहः <br> माता पिता <br> कन्या वरः | मू० <br> मा.महीमा. वृ. प्रपि. <br> मातामही प्रपिताम. <br> माता पितामहः <br> कन्या पिता <br> वरः | मू० <br> मा.महीमा. वृद्धतरप्र. <br> मातामही वृद्धप्रपि. <br> माता प्रपितामहः <br> कन्या पितामहः <br> पिता <br> वरः |
| मू० <br> मातामहमाता वरः <br> मातामहः <br> माता <br> कन्या | मू० <br> मातामः मा. पिता <br> मातामहः वरः <br> माता <br> कन्या | मू० <br> मातामः मा.पितामहः <br> मातामहः पिता <br> माता वरः <br> कन्या | मू० <br> मा. म. मा. प्रपिता. <br> मातामहः पितामहः <br> माता पिता <br> कन्या वरः | मू० <br> मा.म.मा. वृ. प्रपिता. <br> मातामहः प्रपितामहः <br> माता पितामहः <br> कन्या पिता <br> वरः | मू० <br> मा.म.मा. वृ.तरप्र.प्र. <br> मातामहः वृ. प्रपि. <br> माता प्रपितामहः <br> कन्या पितामहः <br> पिता <br> वरः |
| मू० <br> माता पितामही <br> कन्या पिता <br> वरः | मू० <br> माता पितामहमाता <br> कन्या पितामहः <br> पिता <br> वरः | मू० <br> माता पितामहीमाता <br> कन्या पितामही <br> पिता <br> वरः | मू० <br> माता पितामहीपिता <br> कन्या पितामही <br> पिता <br> वरः | | |

| | | | |
|---|---|---|---|
| ७ मू०<br>मातामहः पितामही<br>माता पिता<br>कन्या वरः | मू०<br>मातामहः पितामहमाता<br>माता पितामहः<br>कन्या पिता<br>वरः | मू०<br>मातामहः पितामहीमाता<br>माता पितामही<br>कन्या पिता<br>वरः | मू०<br>मातामहः पितामहीपिता<br>माता पितामही<br>कन्या पिता<br>वरः |
| मू०<br>पितामही पितामही<br>पिता पिता<br>कन्या वरः | मू०<br>पितामही पितामहमाता<br>पिता पितामहः<br>कन्या पिता<br>वरः | मू०<br>पितामही पितामहीमाता<br>पिता पितामही<br>कन्या पिता<br>वरः | मू०<br>पितामही पितामहीपिता<br>पिता पितामही<br>कन्या पिता<br>वरः |
| मू०<br>मातामही पितामही<br>माता पिता<br>कन्या वरः | मू०<br>मातामही पितामहमाता<br>माता पितामहः<br>कन्या पिता<br>वरः | मू०<br>मातामही पितामहीमाता<br>माता पितामही<br>कन्या पिता<br>वरः | मू०<br>मातामही पितामहीपिता<br>माता पितामही<br>कन्या पिता<br>वरः |
| मू०<br>प्रमातामहः पितामही<br>मातामहः पिता<br>माता वरः<br>कन्या | मू०<br>प्रमातामहः पितामहमाता<br>मातामहः पितामहः<br>माता पिता<br>कन्या वरः | मू०<br>प्रमातामहः पितामहीमाता<br>मातामहः पितामही<br>माता पिता<br>कन्या वरः | मू०<br>प्रमातामहः पितामहीपिता<br>मातामहः पितामही<br>माता पिता<br>कन्या वरः |

८

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| मू० | | मू० | | मू० | | मू० | |
| पितामहीपिता | पितामही | पितामहीपिता | पितामहमाता | पितामहीपिता | पितामहीमाता | पितामहीपिता | पितामहीपिता |
| पितामही | पिता | पितामही | पितामहः | पितामही | पितामही | पितामही | पितामही |
| पिता | वरः | पिता | पिता | पिता | पिता | पिता | पिता |
| कन्या | | कन्या | वरः | कन्या | वरः | कन्या | वरः |
| मू० | | मू० | | मू० | | मू० | |
| मातामहीपिता | पितामही | मातामहीपिता | पितामहमाता | मातामहीपिता | पितामहीमाता | मातामहीपिता | पितामहीपिता |
| मातामही | पिता | मातामही | पितामहः | मातामही | पितामही | मातामही | पितामही |
| माता | वरः | माता | पिता | माता | पिता | माता | पिता |
| कन्या | | कन्या | वरः | कन्या | वरः | कन्या | वरः |
| मू० | | मू० | | मू० | | मू० | |
| पितामहमाता | पितामही | पितामहमाता | पितामहमाता | पितामहमाता | पितामहीमाता | पितामहमाता | पितामहीपिता |
| पितामहः | पिता | पितामहः | पितामहः | पितामहः | पितामही | पितामहः | पितामही |
| पिता | वरः | पिता | पिता | पिता | पिता | पिता | पिता |
| कन्या | | कन्या | वरः | कन्या | वरः | कन्या | वरः |
| मू० | | मू० | | मू० | | मू० | |
| पितामहीमाता | पितामही | पितामहीमाता | पितामहमाता | पितामहीमाता | पितामहीमाता | पितामहीमाता | पितामहीपिता |
| पितामही | पिता | पितामही | पितामहः | पितामही | पितामही | पितामही | पितामही |
| पिता | वरः | पिता | पिता | पिता | पिता | पिता | पिता |
| कन्या | | कन्या | वरः | कन्या | वरः | कन्या | वरः |

| | | | |
|---|---|---|---|
| १ मू०<br>मातामहीमाता<br>मातामही<br>माता<br>कन्या<br>पितामही<br>पिता<br>वरः | मू०<br>मातामहीमाता<br>मातामही<br>माता<br>कन्या<br>पितामहमाता<br>पितामहः<br>पिता<br>वरः | मू०<br>मातामहीमाता<br>मातामही<br>माता<br>कन्या<br>पितामहीमाता<br>पितामही<br>पिता<br>वरः | मू०<br>मातामहीमाता<br>मातामही<br>माता<br>कन्या<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |
| मू०<br>मातामहमाता<br>मातामहः<br>माता<br>कन्या<br>पितामही<br>पिता<br>वरः | मू०<br>मातामहमाता<br>मातामहः<br>माता<br>कन्या<br>पितामहमाता<br>पितामहः<br>पिता<br>वरः | मू०<br>मातामहमाता<br>मातामहः<br>माता<br>कन्या<br>पितामहीमाता<br>पितामही<br>पिता<br>वरः | मू०<br>मातामहमाता<br>मातामहः<br>माता<br>कन्या<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |
| मू०<br>कन्या<br>पितामही<br>पिता<br>वरः | मू०<br>कन्या<br>पितामहमाता<br>पितामहः<br>पिता<br>वरः | मू०<br>कन्या<br>पितामहीमाता<br>पितामही<br>पिता<br>वरः | मू०<br>कन्या<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |
| मू०<br>पिता<br>कन्या<br>पितामही<br>पिता<br>वरः | मू०<br>पिता<br>कन्या<br>पितामहमाता<br>पितामहः<br>पिता<br>वरः | मू०<br>पिता<br>कन्या<br>पितामहीमाता<br>पितामही<br>पिता<br>वरः | मू०<br>पिता<br>कन्या<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |

| | | | | | |
|---|---|---|---|---|---|
| ६ मू०<br>मातामहीमाता वरः<br>मातामही<br>माता<br>कन्या | मू०<br>मातामहीमा. पिता<br>मातामही वरः<br>माता<br>कन्या | मू०<br>मा. महीमा. पितामहः<br>मातामही पिता<br>माता वरः<br>कन्या | मू०<br>मा. महीमा. प्रपिता.<br>मातामही पितामहः<br>माता पिता<br>कन्या वरः | मू०<br>मा.महीमा. वृ. प्रपि.<br>मातामही प्रपिताम.<br>माता पितामहः<br>कन्या पिता<br>वरः | मू०<br>मा.महीमा. वृद्धतरप्र.<br>मातामही वृद्धप्रपि.<br>माता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः |
| मू०<br>मातामहमाता वरः<br>मातामहः<br>माता<br>कन्या | मू०<br>माताम. मा. पिता<br>मातामहः वरः<br>माता<br>कन्या | मू०<br>माताम. मा. पितामहः<br>मातामहः पिता<br>माता वरः<br>कन्या | मू०<br>मा. म. मा. प्रपिता.<br>मातामहः पितामहः<br>माता पिता<br>कन्या वरः | मू०<br>मा.म.मा. वृ. प्रपिता.<br>मातामहः प्रपितामहः<br>माता पितामहः<br>कन्या पिता<br>वरः | मू०<br>मा.म.मा. वृ.तरप्र.म.<br>मातामहः वृ. प्रपि.<br>माता प्रपितामहः<br>कन्या पितामहः<br>पिता<br>वरः |
| मू०<br>माता पितामही<br>कन्या पिता<br>वरः | मू०<br>माता पितामहमाता<br>कन्या पितामहः<br>पिता<br>वरः | मू०<br>माता पितामहीमाता<br>कन्या पितामही<br>पिता<br>वरः | मू०<br>माता पितामहीपिता<br>कन्या पितामही<br>पिता<br>वरः | | |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ७<br>मातामहः<br>माता<br>कन्या | मू०<br>पितामही<br>पिता<br>वरः | मातामहः<br>माता<br>कन्या | मू०<br>पितामहमाता<br>पितामहः<br>पिता<br>वरः | मातामहः<br>माता<br>कन्या | मू०<br>पितामहीमाता<br>पितामही<br>पिता<br>वरः | मातामहः<br>माता<br>कन्या | मू०<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |
| पितामही<br>पिता<br>कन्या | मू०<br>पितामही<br>पिता<br>वरः | पितामही<br>पिता<br>कन्या | मू०<br>पितामहमाता<br>पितामहः<br>पिता<br>वरः | पितामही<br>पिता<br>कन्या | मू०<br>पितामहीमाता<br>पितामही<br>पिता<br>वरः | पितामही<br>पिता<br>कन्या | मू०<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |
| मातामही<br>माता<br>कन्या | मू०<br>पितामही<br>पिता<br>वरः | मातामही<br>माता<br>कन्या | मू०<br>पितामहमाता<br>पितामहः<br>पिता<br>वरः | मातामही<br>माता<br>कन्या | मू०<br>पितामहीमाता<br>पितामही<br>पिता<br>वरः | मातामही<br>माता<br>कन्या | मू०<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |
| प्रमातामहः<br>मातामहः<br>माता<br>कन्या | मू०<br>पितामही<br>पिता<br>वरः | प्रमातामहः<br>मातामहः<br>माता<br>कन्या | मू०<br>पितामहमाता<br>पितामहः<br>पिता<br>वरः | प्रमातामहः<br>मातामहः<br>माता<br>कन्या | मू०<br>पितामहीमाता<br>पितामही<br>पिता<br>वरः | प्रमातामहः<br>मातामहः<br>माता<br>कन्या | मू०<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ८ मू० | | मू० | | मू० | | मू० | |
| पितामहीपिता | पितामही | पितामहीपिता | पितामहमाता | पितामहीपिता | पितामहीमाता | पितामहीपिता | पितामहीपिता |
| पितामही | पिता | पितामही | पितामहः | पितामही | पितामही | पितामही | पितामही |
| पिता | वरः | पिता | पिता | पिता | पिता | पिता | पिता |
| कन्या | | कन्या | वरः | कन्या | वरः | कन्या | वरः |
| मू० | | मू० | | मू० | | मू० | |
| मातामहीपिता | पितामही | मातामहीपिता | पितामहमाता | मातामहीपिता | पितामहीमाता | मातामहीपिता | पितामहीपिता |
| मातामही | पिता | मातामही | पितामहः | मातामही | पितामही | मातामही | पितामही |
| माता | वरः | माता | पिता | माता | पिता | माता | पिता |
| कन्या | | कन्या | वरः | कन्या | वरः | कन्या | वरः |
| मू० | | मू० | | मू० | | मू० | |
| पितामहमाता | पितामही | पितामहमाता | पितामहमाता | पितामहमाता | पितामहीमाता | पितामहमाता | पितामहीपिता |
| पितामहः | पिता | पितामहः | पितामहः | पितामहः | पितामही | पितामहः | पितामही |
| पिता | वरः | पिता | पिता | पिता | पिता | पिता | पिता |
| कन्या | | कन्या | वरः | कन्या | वरः | कन्या | वरः |
| मू० | | मू० | | मू० | | मू० | |
| पितामहीमाता | पितामही | पितामहीमाता | पितामहमाता | पितामहीमाता | पितामहीमाता | पितामहीमाता | पितामहीपिता |
| पितामही | पिता | पितामही | पितामहः | पितामही | पितामही | पितामही | पितामही |
| पिता | वरः | पिता | पिता | पिता | पिता | पिता | पिता |
| कन्या | | कन्या | वरः | कन्या | वरः | कन्या | वरः |

१

| | | | |
|---|---|---|---|
| मातामहीमाता<br>मातामही<br>माता<br>कन्या<br>मू०<br>पितामही<br>पिता<br>वरः | मातामहीमाता<br>मातामही<br>माता<br>कन्या<br>मू०<br>पितामहमाता<br>पितामहः<br>पिता<br>वरः | मातामहीमाता<br>मातामही<br>माता<br>कन्या<br>मू०<br>पितामहीमाता<br>पितामही<br>पिता<br>वरः | मातामहीमाता<br>मातामही<br>माता<br>कन्या<br>मू०<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |
| मातामहमाता<br>मातामहः<br>माता<br>कन्या<br>मू०<br>पितामही<br>पिता<br>वरः | मातामहमाता<br>मातामहः<br>माता<br>कन्या<br>मू०<br>पितामहमाता<br>पितामहः<br>पिता<br>वरः | मातामहमाता<br>मातामहः<br>माता<br>कन्या<br>मू०<br>पितामहीमाता<br>पितामही<br>पिता<br>वरः | मातामहमाता<br>मातामहः<br>माता<br>कन्या<br>मू०<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |
| कन्या<br>मू०<br>पितामही<br>पिता<br>वरः | कन्या<br>मू०<br>पितामहमाता<br>पितामहः<br>पिता<br>वरः | कन्या<br>मू०<br>पितामहीमाता<br>पितामही<br>पिता<br>वरः | कन्या<br>मू०<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |
| पिता<br>कन्या<br>मू०<br>पितामही<br>पिता<br>वरः | पिता<br>कन्या<br>मू०<br>पितामहमाता<br>पितामहः<br>पिता<br>वरः | पिता<br>कन्या<br>मू०<br>पितामहीमाता<br>पितामही<br>पिता<br>वरः | पिता<br>कन्या<br>मू०<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |

१०

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| पितामहः<br>पिता<br>कन्या | मू० | पितामही<br>पिता<br>वरः | पितामहः<br>पिता<br>कन्या | मू० | पितामहमाता<br>पितामहः<br>पिता<br>वरः | पितामहः<br>पिता<br>कन्या | मू० | पितामहीमाता<br>पितामही<br>पिता<br>वरः | पितामहः<br>पिता<br>कन्या | मू० | पितामहीपिता<br>पितामही<br>पिता<br>वरः |
| प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू० | पितामही<br>पिता<br>वरः | प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू० | पितामहमाता<br>पितामहः<br>पिता<br>वरः | प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू० | पितामहीमाता<br>पितामही<br>पिता<br>वरः | प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू० | पितामहीपिता<br>पितामही<br>पिता<br>वरः |
| वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू० | पितामही<br>पिता<br>वरः | वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू० | पितामहमाता<br>पितामहः<br>पिता<br>वरः | वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू० | पितामहीमाता<br>पितामही<br>पिता<br>वरः | वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू० | पितामहीपिता<br>[illegible]<br>[illegible]<br>[illegible] |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ११<br>वृद्धतरप्रपि.<br>वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू०<br>पितामही<br>पिता<br>वरः | वृद्धतरप्रपि.<br>वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू०<br>पितामहमाता<br>पितामहः<br>पिता<br>वरः | वृद्धतरप्रपि.<br>वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू०<br>पितामहीमाता<br>पितामही<br>पिता<br>वरः | वृद्धतरप्रपि.<br>वृद्धप्रपितामहः<br>प्रपितामहः<br>पितामहः<br>पिता<br>कन्या | मू०<br>पितामहीपिता<br>पितामही<br>पिता<br>वरः |
| कन्या | म०<br>माता<br>वरः | कन्या | मू०<br>मातामहः<br>माता<br>वरः | कन्या | मू०<br>मातामही<br>माता<br>वरः | कन्या | मू०<br>प्रमातामहः<br>मातामहः<br>माता<br>वरः |
| कन्या | मू०<br>मातामहीपिता<br>मातामही<br>माता<br>वरः | कन्या | मू०<br>मातामहमाता<br>मातामहः<br>माता<br>वरः | कन्या | मू०<br>मातामहीमाता<br>मातामही<br>माता<br>वरः | | |

| | | | |
|---|---|---|---|
| १२ मू०<br>पिता — माता<br>कन्या — वरः | मू०<br>पिता — मातामहः<br>कन्या — माता<br>वरः | मू०<br>पिता — मातामही<br>कन्या — माता<br>वरः | मू०<br>पिता — प्रमातामहः<br>कन्या — मातामहः<br>माता<br>वरः |
| मू०<br>पिता — मातामहीपिता<br>कन्या — मातामही<br>माता<br>वरः | मू०<br>पिता — मातामहमाता<br>कन्या — मातामहः<br>माता<br>वरः | मू०<br>पिता — मातामहीमाता<br>कन्या — मातामही<br>माता<br>वरः | |
| मू०<br>पितामहः — माता<br>पिता — वरः<br>कन्या | मू०<br>पितामहः — मातामहः<br>पिता — माता<br>कन्या — वरः | मू०<br>पितामहः — मातामही<br>पिता — माता<br>कन्या — वरः | मू०<br>पितामहः — प्रमातामहः<br>पिता — मातामहः<br>कन्या — माता<br>वरः |
| मू०<br>पितामहः — मातामहीपिता<br>पिता — मातामही<br>कन्या — माता<br>वरः | मू०<br>पितामहः — मातामहमाता<br>पिता — मातामहः<br>कन्या — माता<br>वरः | मू०<br>पितामहः — मातामहीमाता<br>पिता — मातामही<br>कन्या — माता<br>वरः | |

| | | | |
|---|---|---|---|
| मू०<br>प्रपितामहः — माता<br>पितामहः — वरः<br>पिता<br>कन्या | मू०<br>प्रपितामहः — मातामहः<br>पितामहः — माता<br>पिता — वरः<br>कन्या | म०<br>प्रपितामहः — मातामही<br>पितामहः — माता<br>पिता — वरः<br>कन्या | म०<br>प्रपितामहः — प्रमातामहः<br>पितामहः — मातामहः<br>पिता — माता<br>कन्या — वरः |
| मू०<br>प्रपितामहः — मातामहीपिता<br>पितामहः — मातामही<br>पिता — माता<br>कन्या — वरः | मू०<br>प्रपितामहः — मातामहमाता<br>पितामहः — मातामहः<br>पिता — माता<br>कन्या — वरः | मू०<br>प्रपितामहः — मातामहीमाता<br>पितामहः — मातामही<br>पिता — माता<br>कन्या — वरः | |
| म०<br>वृद्धप्रपितामहः — माता<br>प्रपितामहः — वरः<br>पितामहः<br>पिता<br>कन्या | मू०<br>वृद्धप्रपितामहः — मातामहः<br>प्रपितामहः — माता<br>पितामहः — वरः<br>पिता<br>कन्या | मू०<br>वृद्धप्रपितामहः — मातामही<br>प्रपितामहः — माता<br>पितामहः — वरः<br>पिता<br>कन्या | मू०<br>वृद्धप्रपितामहः — प्रमातामहः<br>प्रपितामहः — मातामहः<br>पितामहः — माता<br>पिता — वरः<br>कन्या |
| मू०<br>वृद्धप्रपितामहः — मातामहीपिता<br>प्रपितामहः — मातामही<br>पितामहः — माता<br>पिता — वरः<br>कन्या | मू०<br>वृ० प्रपितामहः — मातामहमाता<br>प्रपितामहः — मातामहः<br>पितामहः — माता<br>पिता — वरः<br>कन्या | मू०<br>वृद्धप्रपितामहः — मातामहीमाता<br>प्रपितामहः — मातामही<br>पितामहः — माता<br>पिता — वरः<br>कन्या | |

